पवीतशब्देन शेषे व्यक्तिरुच्यते । तथा च नागशब्दस्य सर्पे शक्तिर्नियम्यते । लिङ्गं यथा–'स्वानि शिवं याचति' इत्यत्र स्वशब्दस्य नपुंसकत्वस्या धने शक्तिः । एवं 'मित्रो जयति' इत्यत्र मित्रशब्दस्य पुंस्त्वत्त्वया सूर्ये शक्तिः । संख्या यथा—'हरिर्वसति कानने' इत्यत्र एकत्वेन हरि-शब्दस्य सिंहे शक्तिः(१) । 'यमौ विलोकयन्' इत्यत्र द्वित्वेन यमशब्दस्य युग्मजातार्थे शक्तिः । 'हरयः सन्ति कानने' इत्यत्र बहुत्वेन हरिशब्दस्य वानरे शक्तिः । कारकं यथा 'अब्धितटे दुष्टोऽरिर्हरिणा हतः' इत्यत्र कर्तृत्वेन हरिशब्दस्य वासुदेवे शक्तिः, तस्य शङ्खासुरहन्तृत्वात् । 'अब्धितटे दुष्टं हरिं हरि-र्हतवान्' अत्र कर्मत्वेन हरिशब्दस्य वानरे शक्तिः । तत्र हि बलदेवेन द्विरदाख्यो वानरो हतः । यत्तु प्राञ्चः पुंस्त्वादिकमेव व्यक्तिमाहुः, तच्चिन्त्यम् । व्यज्यते विभक्त्या प्रकटीक्रियतेऽसौ व्यक्तिरिति कर्मव्युत्पत्त्या कृत्स्नस्य नामार्थस्य ग्रहणौचित्यात् । 'पञ्चकं नामार्थः' इति भाष्यसिद्धान्तात् । प्रसिद्धसान्निध्यं यथा-'भक्तवश्यो हरिर्जयति' अत्र भक्तवश्यपदसान्निध्याद्धरिशब्दस्य विष्णौ शक्तिः । एवं 'हेमखर्जूरयोः' इत्यत्र हेमपदसान्निध्येन खर्जूरस्य रजते शक्तिः । अत एव शक्तिग्राहकबलादप्रसिद्धो-ऽपि खर्जूरशब्दः क्वचित्प्रयुज्यत इति न दोषः । आर्हन्ती यथा-'गुरुरेव परं ब्रह्म' इत्यत्रौचित्याद् गुरुशब्दस्य ज्ञानदातरि शक्तिः । एवं 'जीवो जल्पति' इत्यत्र योग्यतया जीवशब्दस्य बृहस्पतौ शक्तिः, तस्यैव ग्राह्यवचनत्वात् । समर्थता यथा-'सुरभिः पिकमादकः' इत्यत्र कोकिलमदोत्पादनसामर्थ्येन सुर-भिशब्दस्य वसन्ते शक्तिः । एवं 'राजा ग्रामधनप्रदः' इत्यत्र

(१) वृत्तिः–इति ख. पुस्तके पाठः ।

वित्तसामर्थ्येन राजशब्दस्य नृपे शक्तिः। देशो यथा-'वैकुण्ठे हरिर्जयति' इत्यत्र वैकुण्ठरूपदेशेन हरिशब्दस्य विष्णौ शक्तिः। एवं 'शम्याप्रासाश्रमे कृष्णम्' इत्यत्र शम्याप्रासरूपदेशेन कृष्णशब्दस्य वेदव्यासे शक्तिः। कालो यथा-'दिवा विभावसुर्भाति' इत्यत्र दिवसरूपकालेन सूर्ये विभावसुशब्दस्य शक्तिः। रात्राविति पाठे वन्हौ। चेष्टा यथा-'इयं गौर्ममेति दर्शयति' इत्यत्र हस्तचेष्टया सर्वनामबोधितया गोशब्दस्य धेनौ शक्तिः। अयमिति पाठे गोशब्दस्य वृषभे शक्तिः। साहचर्यं यथा-'पार्थकृष्णौ रथे स्थितौ' इत्यत्र कृष्णपदसाहचर्यात्पार्थशब्दस्य जिष्णौ शक्तिः। एवं पार्थसाहचर्यात् कृष्णशब्दस्य विष्णौ शक्तिः। विरुद्धता यथा-'रामोऽर्जुनकुलान्तकः' अत्र विरुद्धतया रामशब्दस्य भार्गवे शक्तिः। तत एवाऽर्जुनशब्दस्य कार्तवीर्ये। संयुक्तत्वं यथा-'जयिनौ हरिणौ हरिराघवौ' अत्र हरिशब्दस्य राघवसंयुक्तत्वेन सुग्रीवाख्ये कीशे शक्तिर्नियम्यते। ततश्च राघवशब्दस्य रामे। वियुक्तत्वं यथा-'रामः सीतां स्मरन् दूनः' इति वाक्ये रामशब्दस्य सीतावियुक्तत्वेन राघवे शक्तिः। सीतायाश्च जानक्याम्। स्वरो यथा-'सुधाकरसुहृद्वक्त्रदृष्टिपङ्कजवैरिणी' इत्यत्र पदद्वयेन तत्पुरुषस्वरोच्चारणेन वक्त्रे दृष्टौ च प्राधान्येन शक्तिः। बहुव्रीहिस्वरपाठे तु सुधाकरपङ्कजयोः प्राधान्येनेति। वस्तुतस्तु काव्यमार्गे स्वरो न गण्यते 'स्वरसंस्कारयोश्छन्दसि नियमः' इति प्रातिशाख्यवचनात्। एषामनेकेषां मेलने 'दानाधिक्यात्फलाधिक्य'मिति न्यायेन सौकर्यातिशयः॥

किं चैवं त्रिविधानामपि शब्दानां प्रयोगे सङ्केतरूढिवि-

भिन्ना प्रयोगरूढिरस्ति । सा च सम्प्रदायरूढिः, कविरूढिः, व्यवहाररूढिश्चेति । तदभावे हि वाचकप्रयोगो न भवति । यथा—न हि वचिरन्तिपरः प्रयुज्यते, गत्यर्थौ हन्तिश्च । अत एव नैषधे—

भङ्क्तुं प्रभुर्व्याकरणस्य दर्पं पदप्रयोगाध्वनि लोक एषः ।
शशो यदस्यास्तीति शशी, ततो मृगो यस्यास्तीति मृगी नोक्तः । मत्कृतेऽद्वैतविवेके च—

मृगाङ्कत्वेऽपि न मृगी शशाङ्कत्वाच्छशीति तु ।
चन्द्रमाः कथितस्तत्र रूढेरन्यन्न कारणम् ॥ इति ।

अस्या रूढेर्दर्पभञ्जने प्रसिद्धार्थपदसन्निधिरूपं शक्तिग्राहकं शक्तिनियामकं च समर्थभावं भजतः । यथा—'यस्य वेश्मनि खर्जूरम्' इति वाक्ये रजतवाचकखर्जूरशब्दप्रयोगरूढ्यभावाद्दोषत्वेनाऽभिमतः ।

यस्य गेहे हिरण्यं च खर्जूरं च कृताकृतम् ।
स कथं दीनवदनो याचेदन्यं धनोन्मदम् ॥

इति पाठान्तरकल्पने हिरण्यपदसन्निधिः कृताकृतपदसन्निधिश्च खर्जूरशब्दस्य रजतवाचकत्वबोधनसमर्थाविति । तद्बलेन दोषोद्धारः सुकरः । क्वचित्तु पदान्तरसन्निधिबलेन शब्दप्रयोगाभावेऽपि तच्छक्तिरर्थं बोधयति । यथा—'हे राम मां पाहि' इत्यत्र सम्बोधनम् । मध्यमपुरुषसन्निधिबलेन युष्मच्छब्दोऽध्याह्रियते । अत्र 'युष्मद्युपपदे' इत्यादिसूत्रं प्रमाणम् । अत एवाऽऽह वामनः—'विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ सागराम्बरवत्' इति । अस्मादेव ज्ञापकात् द्विविधोऽप्यध्याहारः समूलः ॥

इति श्री आशाधरभट्टकृतायां त्रिवेणिकायां प्रथमं शक्तिविवेचनाप्रकरणम् ॥

अथ लक्षणा । शक्यसम्बन्धसहकारिणी वृत्तिर्लक्षणा । सा च शब्दव्यापारत्वाच्छब्दनिष्ठा मुख्यार्थबाधे सति तत्सम्बन्धिनमर्थं विषयीकरोति । सम्बन्धश्च मुख्यार्थे प्राधान्येन वर्तमानोऽपि लक्ष्यार्थमाश्रयति । शक्यसम्बन्धो यद्यपि शब्देऽपि वर्तते तथाऽपि लक्षणायामप्रयोजकः ॥

सा च त्रिविधा—जहल्लक्षणा, अजहल्लक्षणा, जहदजहल्लक्षणा च । यत्सत्त्वे शब्दः शक्यार्थं जहाति सा जहल्लक्षणा । न जहाति चेदजहल्लक्षणा । तदुभययुक्ता जहदजहल्लक्षणा । त्रिविधाऽपि पुनर्द्विविधा—निरूढा फलवती च । शक्तिवत्कोशादौ प्रसिद्धा निरूढा । इयं च मुख्यार्थबाधे प्रवर्तते इति शक्तितो विशेषः । एषाऽनादिलक्षणेत्याहुः । फलवती तु व्यङ्ग्यार्थप्रतीतये प्रवर्तिता । सा चाऽऽधुनिकलक्षणेत्याहुः । अस्याः फलं तु व्यङ्ग्यार्थप्रतीतिः । तत्क्वचिद् गूढं क्वचिदगूढं चेति द्विविधम् । गूढं सहृदयमात्रवेद्यम् । अगूढं तु सर्वजनवेद्यम् ॥ पुनरपि लक्षणा द्विविधा—व्यधिकरणविषया समानाधिकरणविषया चेति । यत्र व्यधिकरणपदं तात्पर्यग्राहकं सा व्यधिकरणविषया । यत्र च समानाधिकरणपदं तात्पर्यग्राहकं सा समानाधिकरणविषया । मुख्यार्थबाधकं तात्पर्यग्राहकं तदेव लक्षणाग्राहकमित्युच्यते । पुनरपि गौणी शुद्धा चेत्येषा द्विविधा । सादृश्यसम्बन्धे सति गौणी । तद्भिन्नसम्बन्धे सति शुद्धा । सम्बन्धश्चाऽनेकविधः । सम्प्रदायक्रमेणोदाहरणानि । 'गङ्गायां घोषः' इति । अत्र गङ्गाशब्देन तत्तीरे त्वधिकरणविषया फलवती जहल्लक्षणा । घोषपदं तात्पर्यग्राहकम् । फलं तु शैत्यपावनत्वप्रतीतिः । केचित्तु तीरं सामीपक (१)आधारसप्तम्यर्थ

(१) सामीपिकाधार०—इति ख० पुस्तके पाठः ।

इत्याहुः । एवं 'द्वैतवने युधिष्ठिरं समाययौ' इत्यत्र सरोविशेषवाचिना द्वैतवनशब्देन तत्तीरे व्यधिकरणविषया फलवती जहल्लक्षणा । युधिष्ठिरसमागमस्तात्पर्यग्राहकः । फलं तु विविक्तताप्रतीतिः । 'यत्र द्वैतवने सर' इति भारतोक्तेः । केचित्तु द्वैतवने निरूढा लक्षणेत्याहुः । तथा चोक्तं भारते—

> येन लिङ्गेन यो देशो युक्तः समभिलक्ष्यते ।
> तेनैव नाम्ना तं देशं वाच्यमाहुर्मनीषिणः ॥ इति ।

निरूढलक्षणायाः शक्तितुल्यत्वाद्वाच्यमित्युक्तम् । काव्यप्रदीपे च—

> यन्नामा यत्र चैत्यादिर्विषयोऽपि स तादृशः ॥ इति ॥

'छत्रिणो यान्ति' इत्यत्र छत्रधारिवाचिना छत्रिशब्देन तत्सहचरेष्वच्छत्रिष्वपि व्यधिकरणविषया फलवत्यजहल्लक्षणा । बहुत्वं तात्पर्यग्राहकम् । फलं तु छत्रिमुख्यत्वप्रतीतिः । 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र काकशब्देन दध्युपघातकमात्रे फलवत्यजहल्लक्षणा । फलं तु काकदुष्टताप्रतीतिः । 'राजा गच्छति' इत्यत्र राजशब्देन गजतुरगादिफलवत्यजहल्लक्षणा । फलं तु राजप्रसिद्धिप्रतीतिः । 'धनुर्भृतः संयति लब्धकीर्तयः' इत्यत्र धनुःशब्देनाऽऽयुधसामान्ये फलवत्यजहल्लक्षणा । एवं 'ब्राह्मणग्रामा'दिष्वपि द्रष्टव्यम् ॥

अथ फलवती जहदजहल्लक्षणा । इयमेव भागत्यागलक्षणेत्याहुः । 'पशूननक्ति' इत्यत्र पशुशब्देन तन्नेत्रेषु फलवती जहदजहल्लक्षणा । फलं तु सकलतदात्मसंस्कारप्रतीतिः । एवं 'व्रीहीन् प्रोक्षति' इत्यादावपि ज्ञेयम् । 'कर्णावतंसः' इत्यत्र

कर्णाभरणवाचिनाऽवतंसशब्देन भूषणमात्रे फलवती भाग-त्यागलक्षणा। फलं च तत्र स्थितत्वप्रतीतिः। 'वंशकरीरनीलैः' इत्यत्र वंशाङ्कुरवाचिना करीरशब्देनाऽङ्कुरमात्रं लक्ष्यते। फलं तु चारुत्वप्रतीतिः। 'हिमांशुवंशस्य करीरमेव माम्' इति नल-वाक्येऽपि तथैव। 'करिकलभः' इत्यत्र हस्तिबालकवाचिक-लभशब्देन बालकमात्रं लक्ष्यते। तत्फलं तु प्रौढिप्रतीतिः। अत एव 'एकार्थं पदमप्रयोज्यम्' इत्युक्त्वा करिकलभकर्णावतंसा-दिषु प्रतिपत्तिविशेषकरेषु न दोष इत्याह वामनः। केचित्तु कलभादिपदे लक्षणा नास्ति विशिष्टवाचकत्वाभावात्। 'कल-भः करिपोतः स्यात्' इति कोशे कर्यादिसम्बन्धाभिधानं प्रयोगरूढिप्रदर्शनार्थमित्याहुः। तेन 'भ्रमरकलभौ कर्णयुग-लम्' इति शङ्करस्वामिप्रयोगे लक्षणा न स्यात्। वस्तुतस्तु प्रयोगरूढिर्लोकसिद्धेति कोशादौ तन्निर्देशोऽनावश्यकः। तेन यथोक्तमेव साधु। 'स कीचकैः' इत्यत्र कीचकशब्देन वेणुमात्रे फलवती भागत्यागलक्षणा। फलं तु चारुशब्दोत्पत्तिप्रतीतिः। अन्यथा वेणुमेव ब्रूयात्। अत एव वामनः—'विशिष्टवाच-कानां पदानां विशेषणविशेष्यान्यतरसमवधाने सति विशेष्य-विशेषणान्यतरमात्रपरता ग्राह्या' इति। 'पुंस्कोकिलः' 'पुङ्गवः' इत्यादिषु विशेषणमात्रे इयमेव लक्षणा। तथा च वामनः— 'सविशेषणे हि विधिनिषेधौ सति विशेषणे बाधे विशेष्यमु-पसङ्क्रामतः, सति विशेष्ये बाधे विशेषणमुपसङ्क्रामतः'। 'वंशाङ्कुरश्चारुरस्ति' इत्यत्र विशेषणमात्रे लक्षणेयमेव॥

अथाऽगूढफला। यद्यप्यगूढफलाऽनावश्यं वक्तव्या तथा-ऽपि प्राचीनानुसारेणोच्यते। 'गडुद्वयामिदं पीडयिष्यति किं तदेवाऽग्रे कथयिष्यति' इत्यत्र कथनशब्देन बोधनमात्रेऽगूढ-

फला । फलं तु सुखायिष्यतीति प्रतीतिः ॥ 'वसन्तस्तरून्नर्तयति' इत्यत्र वसन्तशब्देन तद्वर्तिनि मारुतेऽगूढफला जहल्लक्षणा । फलं तु मन्दगत्या तरुचारुतापादकत्वप्रतीतिः ॥ 'फलिता रम्भा जनानाह्वयति'(१) अत्र रम्भाशब्देन तच्छिरोभागेऽगूढफला जहदजहल्लक्षणा । फलं तु फलस्वादुताप्रतीतिः, भूरित्वप्रतीतिश्च ॥ काव्यप्रकाशे भागत्यागलक्षणा नास्ति जहल्लक्षणायामन्तर्भावात् ॥

अथ समानाधिकरणविषया सारोपा साध्यवसाना च कार्यकारणभावादौ शुद्धा जहल्लक्षणा । यथा—'आयुर्घृतम्, आयुरेवेदम्' इत्यत्र शुद्धा फलवती जहल्लक्षणा । फलं त्वसाधारणकार्यकारित्वप्रतीतिः ॥ एवं तात्स्थ्यात्ताच्छब्द्यम्—'कलिङ्गः साहसिकः' ॥ तादर्थ्यात्ताच्छब्द्यम्—'इन्द्रार्था स्थूणा इन्द्रः' ॥ स्वस्वामिभावात्ताच्छब्द्यम्—'राजकीयपुरुषो राजा' ॥ सादृश्यसम्बन्धे तु गौणी अजहल्लक्षणा । यथा—'मुखचन्द्रश्चन्द्र एवाऽयम्' । 'गौर्वाहीको गौरेवाऽयम्' । 'अग्निर्माणवकोऽग्निरेवाऽयम्' । 'पण्डितोऽयमपरः सूर्यः सूर्य एवाऽयम्' । 'सिंहो देवदत्तः सिंह एवाऽयम्' इत्यादिष्वजहल्लक्षणा, पूर्वार्थाऽपरित्यागेन गुणरूपाधिकार्थग्रहणात् ॥ अवयवाऽवयविभावे च जहदजहल्लक्षणा । यथा—'अग्रसानुषु अग्रहस्तः, हस्ताग्रं, अग्रपादः, अग्रसेना' इत्यादिषु । फलं तु महत्त्वादिप्रतीतिः ॥ निरूढा यथा—'रवौ नीलं बुधे पीतम्' इत्यत्र रविबुधशब्दाभ्यां तद्वारयोर्निरूढा जहल्लक्षणा । 'मातृविद्धो गणेश्वरः' इत्यादौ मातृशब्देन तृतीया गणेशशब्देन चतुर्थी लक्ष्यते ।

---

(१) जनान्नाह्वयति—इति क० पुस्तके पाठः ।

इयं च प्राणप्रदार्थित्वात् फलवतीति केचित् । 'यमो न गमने शस्तः' इह यमशब्देन भरणीनक्षत्रं लक्ष्यते । तत्राऽपि पक्षद्वयम् । 'हस्तिहस्तः करिकुम्भः' अत्र हस्तकुम्भशब्दाभ्यां सादृश्याच्छुण्डायां शिरःपिण्डयोश्च निरूढा जहल्लक्षणा । 'बाणैरश्वैश्च हायनैः' इत्यत्र बाणशब्देन पञ्चसङ्ख्यारूपगुणसादृश्यात्पञ्च हायनानि लक्ष्यन्ते । एवमश्वशब्देन सप्त । केचित्तु बाणाश्वशब्दाभ्यां द्रव्यरूपाभ्यां पञ्चसप्तसङ्ख्ययोर्लक्षणा । ततश्च हायनेषु लक्षणेत्याहुः । अन्ये तु बाणशब्देन स्मरणबाणेषु लक्षणा ततश्च सङ्ख्यायां ततो हायने इत्याहुः । एवमश्वशब्देन सूर्याश्वेषु, शेषे तुल्यम् ॥

अथ निरूढाऽजहल्लक्षणा । 'श्वेतो धावति' इत्यत्र गुणवाचिना श्वेतशब्देन तदाश्रयणे हयादौ निरूढाऽजहल्लक्षणा । 'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति' इत्यमरकोशोक्तेः । केचित्तु श्वेतो वर्णोऽस्यास्तीति श्वेतः । अस्त्यर्थे मतुप् । "गुणवचनेभ्यो मतुपो लुगिष्यते" इति तस्य लुकि शक्तिरेवेत्याहुः । 'मञ्चाः क्रोशन्ति' इत्यत्र मञ्चशब्देन तत्रस्था लक्ष्यन्ते । अत्र फलविवक्षायां तु 'तात्पर्याद्विशेषावगतिः' इति न्यायेन फलवत्यपि भवति । एवं 'कुन्ताः प्रविशन्ति' 'यष्टयः प्रविशन्ति' इत्यादावपि ज्ञेयम् । 'द्रोणो व्रीहिः' अत्र द्रोणरूपमानपात्रेण परिच्छिन्ने व्रीहौ द्रोणशब्दो लाक्षणिकः । वैयाकरणास्तु परिमाणं विभक्त्यर्थ इत्याहुः । वस्तुतस्तु सामान्याकारेण परिमाणं शक्यार्थः । द्रोणरूपविशेषाकारेण लक्ष्यार्थ एव । 'सुरद्विषश्चान्द्रमसी सुधेव' इत्यत्राऽसुरसामान्यवाचिना सुरद्विट्शब्देन राहुरूपं विशेषो लक्ष्यते । 'निर्विशेषं न सामान्यं

विशेषा न तदुक्तितः' इति न्यायाद्विशेषार्थलक्षणायां सामान्यार्थो नास्ति । 'तदा निदद्रावुपपल्वलं खगः' इत्यत्र सरोविशेषवाचिना पल्वलशब्देन तत्सामान्यं लक्ष्यते । अत्राऽप्युक्तन्यायेन न विशेषार्थत्यागः । लक्षणां विना समुद्रतुल्योक्तिर्न स्यात् ॥

अथ निरूढा जहदजहल्लक्षणा । 'गृहं संमार्ष्टि' अत्र गृहशब्देन तदेकदेशे निरूढा जहदजहल्लक्षणा । एवं 'कुसुमितद्रुमम्' इत्यादावपि । अथ 'सोऽयं देवदत्तः' अत्र पूर्वकालोत्तरकालवर्तित्वपरित्यागेन देवदत्तमात्रं लक्ष्यते । एवं 'शिवोऽहं' 'सोऽहं' 'तत्त्वमसि' इत्यादावपि ॥

अथ लक्षणाप्रयोजकः सम्बन्धो निरूप्यते । स त्रिविधः—संयोगः, समवायो, विशिष्टबुद्धियोग्यश्चेति । 'सम्बन्धबुद्धिजनकः सम्बन्धः' इति तल्लक्षणम् । तत्र द्रव्ययोरेव संयुक्तबुद्धिहेतुः संयोगो गुणविशेषः । स नानाविधः । 'आत्मानमलङ्करोति' अत्राऽऽत्मशब्देन तत्संयोगि शरीरं लक्ष्यते । व्याप्यव्यापकभावसंयोगोऽयम् । 'वटे गावः सुशेरते' अत्र वटशब्देन तत्संयोगि भूतलं लक्ष्यते । तत्र सामीप्यं सम्बन्धः । केचित्तु सामीप्यं सप्तम्यर्थ इत्याहुः । 'घण्टापथः' अत्र घण्टाशब्देन तदुपलक्षिता गजा लक्ष्यन्ते । धार्यधारकभावश्च सम्बन्धः । 'गणकी लेखकी' अत्र गणकलेखकशब्दाभ्यां तत्पत्न्यौ लक्ष्येते । भर्तृभार्यात्वं च सम्बन्धः । 'पुंयोगादाख्यायाम्' इति ङीप् । स्त्रीपुंसयोर्भिन्नस्थानावस्थानेऽपि विवाहकाले हस्तयोजनजन्या संयोगो यावज्जीवं न (१)निवर्तते । भर्तृभार्यात्वेनेमौ संयुक्तकाविति धीजनकत्वात्, यज्ञादौ सहाऽधिकाराच्च । 'सैन्यसुग्रीववाहनः' अत्रोपलक्षणेन मेघपुष्पवला-

(१) यावज्जीवनं निवर्तते—इत्युभयपुस्तकसंमतः पाठः ।

हकावपि गृह्येते । तदग्रिमश्लोके 'ते हया वासुदेवस्य' इति बहुत्वश्रवणात् । साहचर्यं च सम्बन्धः । 'श्यालः स्वस्रोरथाऽग्रहीत्' इत्यत्र स्वसा च स्वसा च स्वसारौ तयोः । अत्र द्वितीयस्वसृशब्देन तत्पतिर्लक्ष्यते यज्ञादिषु साहचर्यात् । एवं 'प्रथमयोः पूर्वसवर्णः' अत्राऽपरेण प्रथमाशब्देन द्वितीया लक्ष्यते साहचर्यात्, शब्दस्य द्रव्यत्वाच्च । 'गरुडेन निषादग्रामो भक्षितः' अत्र ग्रामशब्देन ग्रामवासिनो जना लक्ष्यन्ते । आधाराधेयभावश्च सम्बन्धः । 'सेतुबन्धे नरः स्नात्वा' इत्यत्र सेतुबन्धशब्देन तदाधारः समुद्रो लक्ष्यते । आधेयाधारभावः(१) सामीप्यं वा सम्बन्धः । एवमन्यत्राऽप्यूह्यम् ॥

नित्यसम्बन्धः समवायः । स पञ्चविधः—अवयवावयविभावो, गुणगुणिभावः, क्रियाक्रियावद्भावो, जातिव्यक्तिभावो, विशेषनित्यद्रव्यभावश्चेति । क्रमेणोदाहरणानि यथा—'शाखामृगो वनमृगः'(२) इह शाखाशब्देन तरुर्लक्ष्यतेऽवयवावयविभावसम्बन्धात् । वनशब्देनाऽपि तथैव । न हि वानरस्य केवलायां शाखायां सकले वने वा नियतः सञ्चारः । वृक्षे तु नियत इति । 'सैन्यानि सोमान्वयमन्वयुस्तं न तं मनोरन्वयमन्वमन्यत' इह वंशवाचिनाऽन्वयशब्देन तदेकावयवो लक्ष्यते । एवं 'रघूणामन्वयं वक्ष्ये' 'निरुध्यमाना यदुभिः कथञ्चित्' इह रघुयदुशब्दाभ्यां तदवयवा लक्ष्यन्ते । 'सन्तानो हि शरीरावयवः' इति धर्मशास्त्रे ॥ 'और्वः पृथ्वी' इत्यत्रौर्वशब्देन पुत्रत्वेन स्वीकृतो वडवाग्निर्लक्ष्यते, पृथ्वी पृथुना पुत्रीत्वेन स्वीकृता भूमिश्च ल-

---

(१) आधाराधेयभाव०—इति—ख० पुस्तके पाठः ।
(२) शाखामृगो वनमृगः—इति क० पुस्तके पाठः ।

क्ष्यते । 'पुंयोगादाख्यायाम्' इति ङीप् ॥ 'देवकया सूर्यया सार्धम्' इहाऽप्युक्तसूत्रेण ङीप् । देवकपुत्रीत्वात्सूर्येति तदभिधानम् । न तु सूर्याशब्दो नवोढावाचकः । एवं कुन्तीशब्दोऽपि, 'कुन्ती' भोजपुत्रीत्वादित्यादि स्वयमूह्यम् ॥ गुणगुणिभावो यथा—'सुरभिषु फलेषु मानसम्' इह सुरभिशब्देन सुगन्धवाचिना तदाश्रयीभूतफलानि लक्ष्यन्ते । गुणगुणिभावश्च सम्बन्धः । 'शिशिरेऽपि पयसि' इत्यत्र तु न लक्षणा, शिशिरशब्दस्य 'शीतं गुणे तद्वदर्थाः' इति श्लोके ऽमरसिंहेन द्रव्यवाचित्वाऽभिधानात् । 'शर्करामास्वादयति' इत्यत्र शर्कराशब्देन तद्गतमाधुर्यगुणो लक्ष्यते । गुणगुणिभावोऽत्र सम्बन्धः । क्रियाक्रियावद्भावो यथा—'पश्य मृगो धावति' इति । अत्र धावतीति क्रियापदेन क्रियाविशिष्टो मृगो लक्ष्यते । 'क्रिया नामेयमत्यन्तादृष्टा' इति भाष्यकारोक्त्या(१) तद्दर्शनासम्भवात् । क्रियाक्रियावद्भावः सम्बन्धः । एवं 'नृत्यं पश्यति वेश्यायाः' इत्यादावपि । 'भेर्यः श्रूयन्ते' अत्र भेरीशब्देन तद्गर्जितं लक्ष्यते । सम्बन्धस्तु स एव । भेर्याकाशगुणित्वं शब्दस्य च गुणत्वमिति गुणगुणिभावः । 'पुष्पं जिघ्रति' तद्गन्धं गृह्णातीत्यर्थः पुष्पस्य पृथ्वीमयत्वात् । गन्धेन सह गुणगुणिभावः । तद्गन्धं जिघ्रतीत्यत्र न लक्षणा । क्रियापदे तु भागत्यागलक्षणा, उपादानमात्रार्थत्वात् । जातिव्यक्तिभावश्च यथा—'क्षत्रजातिरुदियाय भुजाभ्याम्' इत्यत्र क्षत्रजातिशब्देन तदाश्रयीभूता व्यक्तयो लक्ष्यन्ते । जातिव्यक्तिभावश्च सम्बन्धः । 'न जातु

---

(१) क्रिया नामेयत्यन्तापरदृष्टेति भाष्यात्तद०–इति० ख० पुस्तके पाठः ।

ब्राह्मणं हन्यात्' इह व्यक्तिपरेण ब्राह्मणशब्देन तत्समवेता जातिर्लक्ष्यते। अन्यथा सर्वेषामवध्यत्वं स्यात्। सम्बन्धस्तूक्त एव। सामान्यविशेषभावोऽप्ययमेव। केचित्तु 'बहुव्यापकं सामान्यम्, अल्पव्यापकं विशेषः' इति लक्षयित्वा तदतिरिक्तमपि सामान्यविशेषभावमाहुः। यथा-'जनेन यूनः स्तुवता' इत्यत्र यून इत्यनेन यौवनविशिष्टा राजानो लक्ष्यन्ते। 'निदर्शनं नैषधम्' इति नलं प्रति निर्देशात्। 'अदेवमातृकाः कुरवः' अत्राऽदेवमातृकशब्देन नदीमातृका लक्ष्यन्ते। अन्यथा देवरूपमातृरहिता इत्यर्थः स्यात्। सामान्यविशेषभावश्च सम्बन्धः। यतो देवमातृकभिन्नाः कूपादिमातृका अपि देशा भवन्ति। एवं 'असितयामिनीष्वनीलवाजिनम्' इत्यादावपि द्रष्टव्यम्। विशेषनित्यद्रव्यभावो यथा—'स एव कालेन दुरत्ययेन ते' अत्र कालेनेति भावप्रधाननिर्देशस्तेन नित्यद्रव्यस्य कालस्य सम्बन्ध इति तार्किकाः। यद्वशादयमनेन विशिष्टबुद्धिरुत्पद्यते स विशिष्टबुद्धिजनकः। स नानाविधः। तत्र जन्यजनकभावो यथा—'विधिहेतुरहेतुरागसाम्' अत्राऽऽगःशब्देन तज्जन्यं दुर्यशो लक्ष्यते, तेन दुर्यशसामहेतुरर्थसिद्ध इति। एवं 'मुनिभिः स्मृतः' अत्र स्मृतशब्देन तज्जन्ये कथने लक्षणा। 'मुनयो विदुः' अत्र विदुरित्यनेन तत्कृता ग्रन्था लक्ष्यन्ते। 'ॐमित्येकाक्षरं ब्रह्म' इति वाक्ये ब्रह्मशब्देन ब्रह्मवाचकमित्यर्थो लक्ष्यते। विशेषणविशेष्यभावश्चाऽत्र सम्बन्धः। 'काकः काकः पिकः पिकः' इत्यत्र काकपिकशब्दाभ्यामुक्तसम्बन्धेन निन्दास्तुती लक्ष्येते। 'धनुर्भृतां हस्तवतां पृषत्काः' इह हस्तशब्देन प्रशस्ता हस्ता लक्ष्यन्ते। एवं 'रामस्य गात्रमसि' इत्यादौ व्यर्थं पदं किञ्चिदर्थं गमयति। अत्र विशेषणविशेष्यभावः सम्बन्धः। 'हरिवं-

शः श्रूयते' 'रघुवंशः पठ्यते' इत्यादौ हरिवंशरघुवंशशब्दाभ्यां तत्प्रतिपादकयोर्ग्रन्थयोर्लक्षणा । वर्ण्यवर्णभावः सम्बन्धः । 'कुमारकिरातनैषधाः पठनीयाः' अत्राऽपि वर्ण्यनामभिस्तद्वर्णका ग्रन्था लक्ष्यन्ते । नामैकदेशेन समस्तनामग्रहणं चेदवयवावयविभावोऽस्तु । 'अनुकूलं भाषसे' इहाऽपि कूलमनुगतमनुकूलमिति व्युत्पत्त्या तीरलग्नं नदीजलं वाच्यम् । तत्सादृश्याद्वचने लक्षणा । उपमानोपमेयभावः सम्बन्धः । 'विलोमं वक्ति' अत्र विपरीतं लोम विलोममिति व्युत्पत्त्या वक्रीकृतं विलोमं वाच्यम्, तत्सादृश्याद्वचने लक्षणा । 'समीपं गतः' सङ्गता आपो यस्मिन्निति व्युत्पत्त्या 'द्व्यन्तरुपसर्गेभ्यः' इत्यकारस्येकारः । सुलभं जलस्थानं वाच्यम्, तत्सादृश्यात्पार्श्ववर्तिनि प्रदेशे लक्षणा । एवं सम्बन्धान्तराणि स्वयं विभावनीयानि । प्रायो न्यायशास्त्रानुसारादियं विवेचना । अवयवावयविभावस्य कार्यकारणभावस्य सामान्यविशेषभावस्य च द्वैविध्येऽपि न दोषः॥

अथ त्रिविधे साक्षात् सम्बन्धे सर्वत्र लक्षणेति न नियमः । प्रत्यक्षे संयुक्तसमवायादिव परम्परासम्बन्धस्याऽपि लक्षितलक्षणादावुपयोगदर्शनात् । तथा लक्षितेन लक्षणया गृहीतेन भ्रमरादिशब्देन द्विरेफादेः षट्पदपिण्डादौ लक्षणा लक्षितलक्षणेत्युच्यते । तत्र द्विरेफशब्दो द्वौ रेफौ यस्मिन्निति व्युत्पत्त्या यौगिको न तु योगरूढो भ्रमरशब्दपरतया प्रयोगाऽदर्शनात् । तेन 'निर्झरगुर्जरनिर्जरा'दिसकलरेफद्वयान्वितशब्दसाधारणवाची न तु केवलभ्रमरपरः । तत्र सामान्यविशेषभावसम्बन्धेन भ्रमरशब्दो लाक्षणिकः । यथा—'मुनिममिमुखतां निनीषवो याः' इत्यत्र मुनिशब्दो नृपतिमुनौ लाक्षणिकः । 'नृपतिमुनिप-

रिग्रहेण सा भूः' इति प्रयोगदर्शनात् । अथ वाच्यवाचकभावेन लक्षणयाऽभेदारोपात् भ्रमरशब्दलक्षितषट्पदे द्विरेफशब्दस्योक्तरीत्या लक्षितलक्षणा । तत्र सम्बन्धद्वयसम्भवात्परम्परासम्बन्धः । एवं यत्र नामैकदेशे नाममात्रग्रहणं तत्राऽवयवावयविभावसम्बन्धेन समग्रशब्दे लक्षणा । ततस्तदर्थे वाच्यवाचकभावेनेति बोध्यम् । यथा—'आभाकासितपक्षेषु' इति । इहाऽऽभाकेतिशब्दावयवैराषाढभाद्रपदकार्तिकावयविनो लक्ष्यन्ते । ततस्तदर्थभूता मासा इति । एवं 'भीमो' 'भीमसेनः' इत्यादावपि द्रष्टव्यम् । व्याकरणमते तु "विनाऽपि प्रत्ययं पूर्वोत्तरयोर्वा लोपो वक्तव्यः" इति भीमादिषु शक्तिरेव । व्यतिरेकलक्षणायामपि परम्परासम्बन्ध एव । 'नयेन जेतुं जगतीं सुयोधनः' इत्यत्र सुयोधनशब्देन दुर्योधनशब्दे लक्षणा । ततस्तद्वाच्ये राज्ञि, इति विवेकात् । एवं 'साधु दूति ! पुनः साधु' इत्यादावपि बोद्धव्यम् ॥

अथ गौण्यां विशेषः । गौणलक्षणायामपि परम्परासम्बन्धः, उपमानोपमेयधर्माणामभेदारोपानन्तरं द्वितीयलक्षणाप्रवृत्तेः । तत्र 'राजेन्द्रः' 'राजेन्दुः' 'नृसविता' 'नृसोमः' 'भूपालसिंहः' इत्यादावुपमितसमासे व्यस्तोपमायां समस्तरूपके च लक्षणा नास्ति । समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवदिति । शब्दार्थस्य एवकारार्थस्य च समासशक्त्या निर्वाहादिति प्राञ्चः । यद्यपि सिद्धान्तकौमुद्याम्—'इह पूर्वपदं तत्सदृशे लाक्षणिकम्' इत्युक्तं, तथाऽपि लाक्षणिकसदृशमिति तदर्थाश्रयणेन समासशक्तिविवक्षैव तत्राऽनुसन्धेया । अन्यथा स्वसिद्धान्तभङ्गापत्तेः ॥ 'उद्बाहुरिव वामनः' इत्यादाविवशब्दस्य सादृश्यवाचि-

त्वादारोपाभावाच्च लक्षणाऽभावः ॥ 'मुखचन्द्रः' इत्यादौ समस्तरूपके त्वारोपसत्त्वे तस्य समासोत्पन्नसमुदायशक्त्या निर्वाहाल्लक्षणाभावः । अत एव व्यस्तोदाहरणानि प्राचीनैर्दर्शितानि । कोविदानन्देऽपि 'स्त्रीरत्नं गिरिजा' इत्यत्र व्यस्तमेवोदाहरणमित्यवधेयम् । एवं वृत्त्यन्तरेऽप्यूह्यम् । अत्रोपमानोपमेयभावसम्बन्धः । सादृश्यं तदेव । तल्लक्षणं तूक्तं विद्यानाथेन--

अन्योन्यधर्मशालित्वं स्पष्टसादृश्यमुच्यते ।
तन्मूलमुपमादीनां हारादीनां हिरण्यवत् ॥ इति ।

अत्र स्पष्टपदेन देवदत्तयज्ञदत्तयोः पशुत्वाभावे मनुष्यत्वब्राह्मणत्वादिधर्मेण सादृश्यं, स्पष्टत्वस्य सम्प्रदायारूढत्वात् । अन्योन्यशब्देन तद्धर्माभिन्नत्वमुक्तम् । ततश्च भिन्नयोर्धर्मिणोरभिन्नधर्मशालित्वं सादृश्यमित्युक्तं भवति ॥ नन्वन्यधर्मस्यान्यत्रासम्भवादन्योन्यधर्माभेदः कथमिति चेदुच्यते—'तापेन भ्राजते सूरः शूरश्चापेन राजते' इत्यादौ सूरशोभाशूरशोभयोर्भेदेऽपि सजातीयत्वेन भेदाभावः । रूपकादौ त्वभेदारोपाद्भेदाभावः । अयं च वस्तुप्रतिवस्तुभावः कथ्यते ॥ 'त्वमेव कीर्तिमान् राजन्' इत्यादौ च कीर्तिमत्त्वकान्तिमत्त्वयोर्वैजात्येऽपि बिम्बप्रतिबिम्बभावेनाऽभेदप्रतीतियोग्यत्वम् । अत एव लक्षणेऽभिन्नपदेनाऽभेदप्रतीतियोग्यत्वं विवक्षितमिति बोध्यम् ॥ सारोपायां गुणमात्रे लक्षणा । गुणी तु शक्त्या गृह्यते । साध्यवसानायां(१) तु द्वयोरपि तत्र विषयस्य निगरणात् । स्वे-

(१) सारोपायां—इति ख० पुस्तके पाठः ।

च्छयाऽतस्मिंस्तद्बुद्धिरारोपः । स्वेच्छया विषयिणा विषयग्रहणमध्यवसानम् । श्रीधरस्वामिना 'गौणी वृत्तिर्भिन्नैव' इत्युक्तम् । यदि लक्षणावृत्तिर्न स्यात्तर्हि घृणाकरं त्रपाकरममङ्गलं चेति त्रिविधमश्लीलं वारयितुं कः क्षमते । तथा हि—

विष्ठोत्सारणकर्ता मर्ता कार्येषु पादचार्यनुगः ।
कृतयाभना च विटस्त्री कार्ये गर्ह्येऽपि तुच्छमूल्यानि ॥

अत्र लक्षणया दोषोद्धारः ।

मलसंमार्जनकर्ता त्यक्तात्मेहश्च पादचार्यनुगः ।
कृतगमना च विटस्त्री कार्ये गुह्येऽपि तुच्छमूल्यानि ॥

अत एवाऽऽहुः--

शक्तिं भजन्ति सरला लक्षणां चतुरा नराः ।
व्यञ्जनां नर्ममर्मज्ञाः कवयः कमना जनाः ॥

इति श्री आशाधरभट्टकृतायां त्रिवेणिकायां द्वितीयं लक्षणाप्रकरणम् ॥



अथ व्यञ्जनाप्रकरणं लिख्यते । शक्यलक्ष्यातिरिक्तार्थबोधिका वृत्तिर्व्यञ्जना । सा च मुख्यार्थबाधाभावेऽपि प्रवर्तते शक्यलक्ष्यार्थबोधानन्तरञ्च । तेन शक्तिमूला लक्षणामूला चेत्याहुः । दूरार्थबोधे व्यञ्जनामूलापि व्यञ्जना भवति । क्रमेणोदाहरणानि । तत्र प्रकृताप्रकृतश्लेषे शब्दशक्तिमूला व्यञ्जनेति प्राञ्चः ।

सा यथा—

आशाधरहृदुत्पन्ना विमला बुद्धिशुद्धिदा ।
कोविदानन्दसहजा ऽनुग्राह्यैषा त्रिवेणिका ॥

अत्र ग्रन्थपरत्वेन तीर्थपरत्वेन कन्यापरत्वेन च योजनया पक्षत्रयम् । तत्र ग्रन्थतीर्थयोरभेदोपचारात्प्रकृतश्लेषः । तत्र सादृश्यमात्रं व्यञ्जनागम्यम् । कन्यापक्षस्तु व्यञ्जनागम्यः । तत्र येषां शब्दानां विनिमयः कर्तुं न शक्यते तदाश्रया व्यञ्जना ॥ शब्दावयवाश्रयापि सा दृश्यते । यथा––

दानी पानी तथा ज्ञानी ध्यानी मानी निधान्यपि ।
राजा मयूरचित्रोऽयं येन राजन्वती क्षितिः ॥

दानी बहुप्रदः । पानी मद्यपः । ज्ञानी सुज्ञः । ध्यानी नित्यध्याननिष्ठः । मानी अतिशयितमानः । निधानी निधिसम्पन्नः । अत्र––

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायिने ।
सम्बन्धे तु विवक्षायां भवन्ति मतुबादयः ॥

इति वार्तिकोक्त्या भूमनिन्दयोरर्था व्यञ्जनागम्याः तद्धितद्योत्यत्वात् । द्योत्यार्थस्य काव्यप्रकाशे व्यङ्ग्यत्वस्वीकारेण तद्वतो ध्वनितमुदाहृतम् ! द्योत्यार्थे हि सङ्केताभावान्न शक्तिः, शक्यार्थबोधानन्तरं तद्बोधाच्च । शब्दबुद्धिकर्मणां विरम्य व्यापाराभावान्नाऽपि लक्षणा प्रत्ययमुख्यार्थबाधाभावात्तत्सम्बन्धाभावाच्च । 'राजन्वती' इत्यत्रापि राजपदं शोभनराज्ञि लाक्षणिकमिति न भ्रमितव्यं वृत्तौ लक्षणा नास्तीति सिद्धान्तात् । तत्र नकारोच्चारणेन शोभनत्वं व्यज्यते इति

प्रकृत्याश्रया व्यञ्जनैवेति दिक् ॥ अर्थाश्रया उभयाश्रया च व्यञ्जना कोविन्दानन्दे द्रष्टव्या ॥ लक्षणाश्रया यथा--

कलत्रवानहं बाले ! कनीयांसं भजस्व मे ।

इत्यत्र कलत्रशब्देन तत्सान्निध्ये लक्षणा, अन्यथा लक्षणस्याऽपि तथात्वापत्तेः । 'बाले' इत्यनेन च भूरिकामत्वे लक्षणा । 'बाला स्यात् षोडशाब्दा तदुपरि तरुणी त्रिंशतो यावदूर्ध्वम्' इति रतिरहस्योक्तेः । ततश्चाऽहं भोगतृप्तत्वान्न त्वदभिगम्यः, अतो हि कामातुरायास्तत्र सन्तोषो न स्यादिति व्यज्यते । किञ्च स्वस्य कलत्रसन्निध्योक्त्या एकपत्नीव्रतं गम्यते । तत्सान्निध्यौ दुष्टाचरणनिषेधात्सातीयाः स्वाधीनपतिकात्वं चेति । ततश्च 'कलत्रवानहं क्व, बाला त्वं क्व' इति विषमालङ्कारोऽपि गम्यः । 'कनीयांसम्' इति लक्ष्मणविशेषणादसन्निहितकलत्रः कनिष्ठश्च स बालायास्तवाऽनुरूप इति समालङ्कारोऽपि गम्यः । स्वस्य लक्ष्मणस्य च विषयालङ्कारोऽपि । यद्वा कलत्रशब्देन लावण्यादिगुणसम्पन्ने लक्षणा । तेन तादृश्या त्वया मम किं प्रयोजनमिति व्यज्यते ॥ व्यञ्जनामूला व्यञ्जना यथा—

क्षीरत्यजं नीरपिबं च हंसं व्यासं विरक्तं च शुकं गृहस्थम् ।
वदामि वाणी मम चेद्यथार्था तदा सुधीभिर्मम धीर्न निन्द्या ॥

अत्र सुधीशब्देन परीक्षाकुशलत्वं व्यज्यते । सुधियो हि परीक्षामन्तरेण स्तुतिं निन्दां वा न कुर्वन्ति । परीक्षा हि हंसानां क्षीरेण सह परिचयाभावात्तद्ग्रहणपाटवं न स्यादेवेति युक्तिः । तत्सदृशानां ज्ञानिनामपि स्थूलतया निन्द्यपरिणाम-

तया आपातरमणीयतया च विषयसुखं हेयं भवति । सूक्ष्मतया निर्विकारितया सर्वकालरमणीयत्वेन च ब्रह्मसुखमुपादेयं भवतीति युक्तिः । लोकप्रसिद्धं तु न तथेति । किञ्च व्यासस्य पत्न्यश्रवणादरण्ये पतिताच्छुक्राच्छुकीनामाऽप्सरोदर्शनक्षुभिता-त्पुत्रोत्पत्तिवर्णनाद्ब्रह्मविद्याप्रवर्तकत्वाद्विरक्तत्वमध्यवसीयते । प्र-सिद्धभारतकथामनादृत्य पत्नीद्वारा पुत्रोत्पत्त्यादिकथनं विरुद्ध-मेव । शुकस्य चाऽपत्यपञ्चकवर्णनात् स्वरूपेण रूपान्तरेण वा गृहस्थत्वमिति बोध्यम् । तत्र हरिवंशे स्वरूपेण भागवते च 'स कृत्व्यां शुककन्यायाम्' इति शुकोक्तौ मम कन्यायामिति च वक्तव्येऽपि शुकपदं रूपान्तरबोधनार्थमिति । एवं परीक्षिते युक्तिमूला शास्त्रमूला च मम वाणी सत्या भवति चेदेतदर्थवि-षया मम धीः स्तुत्यैव भवतीति सुधीशब्दे गम्योऽर्थः । ततश्चा-ऽस्मिन् ग्रन्थे कोविन्दानन्दे च प्रसिद्धिविरुद्धं किञ्चिदस्ति चेत्परीक्ष्य स्तुत्यमेवेति प्रार्थना व्यज्यते ॥

अत्र तार्किकाः—व्यङ्ग्यार्थो हि ज्ञापनेन हेतुनाऽनुमी-यते तदर्थं व्यञ्जना न स्वीकार्या । 'अनन्यलभ्यो हि शब्दार्थः' इति न्यायादतिरिक्तवृत्तिस्वीकारे गौरवाच्चेत्याहुः । तन्न, 'साधु दूति ! पुनः साधु' इत्यत्र काकुवक्रोक्तौ व्यतिरेकलक्ष-णामूलव्यञ्जनया 'मद्रमणेन सह विलसन्त्या त्वयाऽनुचित-स्वार्थसाधनं कृतम्' इति व्यज्यते । तत्र दन्तैर्नखैश्च विलूनत्वं हेतुः । तस्य च नियुद्धसाधारणत्वेन सव्यभिचारत्वान्नाऽनुमा-नसिद्धिरिति व्यञ्जना स्वीकार्या । एवमन्यत्राऽपि द्रष्टव्यम् ॥

अत्र वैयाकरणाः—शक्तिरेव शब्दवृत्तिः, तस्याश्च प्र-सिद्ध्यप्रसिद्धिभ्यां शक्तिलक्षणाव्यपदेशः । व्यञ्जना तु तत्रा-

न्तर्भवति दीर्घव्यापारादिति । तन्न, स्वीकारात् 'सकृदुच्चरितः शब्दः सकृदर्थं गमयति' इति न्यायाद्वाच्यार्थबोधानन्तरं व्यङ्ग्यार्थे शक्तेरप्रवृत्तेः ॥

इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा ।
अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा ॥ इति ।

शक्तिलक्षणस्य व्यञ्जनायामप्रवृत्तेश्च । व्यञ्जनाया अनादित्वाभावात् काव्यस्योत्तमादिभेदत्रयाऽनुपपत्तेश्च । उत्तमकाव्यं हि व्यङ्ग्यार्थप्रधानम् । तद्भिन्नं मध्यमम् । गोमूत्रिकादिशब्दचित्रं, वायुमित्रेत्याद्यर्थचित्रं चाऽधमम् । अनुप्रासोपमाद्यर्थचित्रं चमत्कारकारित्वात् क्वचिदुत्तमं क्वचिन्मध्यमं च । अधमं तु न काव्यतया गणनीयम् । यथाऽऽह ध्वनिकारः—

प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैव व्यवस्थितेः ।
उभे काव्ये तदन्यद्यत्तच्चित्रमभिधीयते ॥ इति ।

ततश्च सिद्धं व्यञ्जनायाः सफलत्वमिति दिक् ॥

यदिह लिखतामव्युत्पत्त्या पतेल्लघु दूषणं
निपुणधिषणैरुज्झित्वा तत्कृतिर्मम सेव्यताम् ।
सरसि विमले वातक्षिप्तं निवार्य तु शैवलं
सलिलममृतप्रायं प्रायः पिबन्ति पिपासवः ॥

यदि मम सरस्वत्यां कश्चित्कथञ्चन दूषणं
प्रलपति, ततः प्रौढप्रज्ञैः स किं कविभिः समः ।
रघुपतिकुटुम्बिन्यां सत्यामवद्यमुदाहरन्
हतकरजकः साम्यं लेभे स किं सह राजभिः ॥

प्रभापटले निबद्धमिदं हरिणीद्वयं तापापनोदाय त्रिवेणिकामान्ते विन्यस्तम् । यथा रघुवंशस्थाः श्लोकाः स्वकृतत्वात् कुमारसम्भवे विन्यस्ताः ॥

इति श्रीपदवाक्यप्रमाणपारावारीणरामजीभट्टात्मज-आशाधरभट्टविरचितायां त्रिवेणिकायां तृतीयं व्यञ्जनाप्रकरणम् ॥

समाप्तश्चायं ग्रन्थः ।





## THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS:

Edited by
GOPINATH KAVIRAJ, M. A.

No. 1—The Kiraṇāvalī Bhāskara, a Commentary on Udayana's Kiraṇāvalī, Dravya section, by Padmanābha Miśra.
Edited with Introduction and Index by Gopināth Kavirāj, M.A.

No. 2—The Advaita Chintāmaṇi, by Raṅgoji Bhaṭṭa, Ed. with Introduction etc. by Nārâyaṇa S'āstrī Khiste Sāhityāchārya.

No. 3—The Vedānta Kalpalatikā, by Madhusūdana Sarasvatī.
Ed. with Introduction etc. by Rāmājñā Pāṇḍeya Vyākaraṇāchārya.

No. 4—The Kusumāñjali Bodhanī, a Commentary on Udayana's Theistic Tract, Nyāya Kusumāñjali, by Varadarāja.
Ed. with Introduction etc. by Gopinath Kaviraj, M. A.

No. 5—The Rasasāra, a Commentary on Udayana's Kiraṇāvalī, Guṇa Section, by Bhaṭṭa Vādīndra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M. A.

No. 6 (Part I)–The Bhavanā Viveka by Maṇḍana Miśra, with a Commentary by Bhaṭṭa Umbeka.
Ed. with Introduction etc. by Mm. Gaṅgānātha Jhā, M.A., D. Litt.

No. 6 (Part II)—Ditto Ditto

No. 7 (Part I)–Yoginīhṛdaya dīpikā, by Amṛtānanda Nātha, being a Commentary on Yoginīhṛdaya, a part of Vāmakeśvara Tantra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A

No. 7– ( Part II ) Ditto Ditto

No. 8—The Kāvyaḍākinī, by Gaṅgānanda Kavīndra.
Ed. with Introduction etc. by Jagannātha S'āstrī Hoshing Sāhityopādhyāya.

No. 9 (Part I)–The Bhakti Chandrikā, a Commentary on S'āṇḍilya's Bhaktistūras, by Nārāyaṇa Tīrtha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.

No. 10( PartI)–The Siddhāntaratna, by Baladeva Vidyābhūṣaṇa.
Ed. with a Prefatory Note by Gopinath Kaviraj, M. A.

No. 11–The S'rī Vidyā Ratna Sūtras, by Gauḍapāda, with a Commentary by S'aṅkarāraṇya.
Ed. with Introduction etc. by Nārāyaṇa S'āstrī Khiste Sāhityāchārya.

No. 12–The Rasapradīpa, by Prabhākara Bhaṭṭa.
Ed. with Introduction etc. by Nārāyaṅa S'astrī Khiste Sāhityāchārya.

No. 13–The Siddhasiddhānta Saṅgraha, by Balabhadra.
Ed. with Introduction by Gopinath Kaviraj, M. A.

No. 14–The Triveṇikā, by Āśādhara Bhaṭṭa.
Ed. with Introduction by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jaganātha S'āstri Hoshing Sāhityopādhyāya.

No. 15 (Part 1)–The Tripurārahasya.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.

No. 16–The Kāvya Vilāsa, by Chirañjīva Bhaṭṭāchārya.
Ed. with Introduction etc. by Baṭukanātha S'armā Sāhityopādhyāya, M.A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya.

No. 17–The Nyāya Kalikā, by Bhaṭṭa Jayanta.
Ed. with Introduction by Mm. Gaṅgānātha Jhā, M.A., D.Litt.

No. 18 (Part I)–The Gorakṣa siddhānta Saṅgraha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.



THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES:

Edited by

GOPINATH KAVIRAJ, M. A.

Vol. I—

(a) Studies in Hindu Law (1): its evolution, by Gaṅgā nātha Jhā.

(b) The View point of Nyāya Vaiśeṣika Philosophy, by Gopi nath Kaviraj.

(c) Nīrmāṇa *Kāya*, by Gopinath Kaviraj.

Vol. II—

(a) Paraśurāma Miśra ALIAS Vāṇī Rasāla Rāya, by Gopinath Kaviraj.

(b) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(c) Studies in Hindu Law (2):–its sources, by Gaṅgānātha Jha.

(d) A New Bhakti Sūtra, by Gopinath Kaviraj.

(e) The System of Chakras according to Gorakṣa nātha, by Gopinath Kaviraj.

(f Theism in Ancient India, by Gopinath Kaviraj.

(g) Hindu Poetics, by Baṭuka nātha S'arma.

(h) A seventeenth Century Astrolabe, by Padmākara Dvivedi.

(i) Some aspects of Vīra S'aiva Philosophy, by Gopinath Kaviraj.

(j) Nyāya Kusumāñjali ( English Translation ), by Gopinath Kaviraj.

(k) The Definition of Poetry, by Nārāyaṇa S'āstrī Khiste.

(l) Sondala Upādhyāya, by Gopinath Kaviraj.

Vol. III—

(a) Index to S'abara's Bhāṣya, by the late Col. G.A. Jacob.

(b) Studies in Hindu Law (3) Judicial Procedure: by Gaṅgā nātha Jha.

(c) Theism in Ancient India, by Gopinath Kaviraj.

(d) History and Bibliogpraphy of Nyāya V'iśeṣika Literature, by Gopinath Kaviraj.

(e) Naiṣadha and S'rī Harṣa, by Nīlakamala Bhaṭṭāchārya.

(f) Indian Dramaturgy, by P. N. Pātankar.

Vol. IV—(In progress)—

(a) Studies in Hindu Law. (4) Judicial Procedure: by Gaṅgā-natha Jhā.

(b) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(c) Analysis of the Contents of the ṚgVeda Prātiśākhya, by Maṅgala Deva Sāstrī.

(d) Nārāyaṇa's Gaṇitā kaumudī, by Padmākara Dvivedi.

(e) Food and Drink in the Rāmāyanic Age, by Manmatha nātha Roy.

(f) Satkāryavāda: Causality in Sāṅkhya, by Gopinath Kaviraj.

To be had of—

The Superintendent, Government Press,

Allahabad, U.P. (India).